कु॰
३२

नान्यपि कथंचित्सादृश्यं तयोः प्रस्तुतत्वालंबने नोदाहरणीयानि इति दिङ्मात्रमुदाह्रियते॰ रात्रिः शिवाका
चनसन्निधत्ते विलोचने जाग्रतमप्रमत्ते समानधर्मा युवयोः सकाशे सखा भविष्यत्यचिरेण कश्चित्
९१ अत्र शिवसारूप्यमिव नदेकदेशतया तत्र च भाललोचनमपि शिवरात्रिमाहात्म्यप्रयुक्तत्वेन व
र्णनीयमिति तेन तत्सखेन कंठस्य शिवसारूप्यं गम्यम्॰ यथा वा॰ वहंती सिंदूरप्रबलकवरीभारतिमिरत्वि
षां द्वेधैर्वंदीकृतमिव नवीनार्ककिरणं॰ तनोतु क्षेमं नस्तव वदनसौंदर्यलहरीपरीवाहस्रोतः सरणि
रिव सीमंतसरणिः ९३ अत्र वर्णनीयत्वेन प्रस्तुतायाः सीमंतसरणेर्वदनसौंदर्यपरीवाहत्वोत्प्रेक्ष
णेन परिपूर्णतडागवत् परीवाहकारणीभूतास्वस्थाने अमांती वदनसौंदर्यसमृद्धिः प्रतीयते सापि
वर्णनीयत्वेन प्रस्तुतैव यथा वा॰ अगाहंसि मृणालकांडमयनेभृंगा वशेषांस्त्विं नासामौक्तिकमिंद्र
नीलसरणिश्वासानिलात्क्रान्ते दत्तेयं हिमवालुकापि कुचयोर्धत्ते त्वणां दीयतां तन्नाशायः पतितांबुव
त्करतलेधारां बुसंतीयते ९४ अत्र नायिकाया विरहसहत्वातिशयप्रकटनाय संतापवर्णनत्को।

राम:
३२

नासु विद्यमानासु वालिकां रतये क्लेशयति कामिने प्रवृत्ति कस्याश्चिद्विदग्धाया वचनमिति तत्प्रत्युपालंभो
द्योतनं ॥ यथा वा ॥ कोशं द्रुमियं दधाति नलिनी कादंबचंचुक्षतं धत्ते चूतलता नवं किशलयं पुंस्को
किलास्वादितं ॥ इत्याकर्ण्य मिथः सखीजनवचः सा दीर्घिकायास्तटे चेलांतेन तिरोदधे स्तनतटं वि
वाधरं पाणिना ॥ ८० ॥ अत्र इयमिति नलिनीव्यक्तिविशेषनिर्देशेन दीर्घिकायास्तट इत्यनेन वाच्यार्थस्य
प्रस्तुतत्वं स्पष्टं प्रस्तुतांतरद्योतनं च स्वयमेव कविनाविःकृतं उत्तरार्द्धे ॥ अत्रोदाहरणयोरन्या
पदेशध्वनिमाह लोचनकारः अप्रस्तुतप्रशंसायां वाच्यार्थो प्रस्तुतत्वादवर्णनीय इति तत्राभिधायां न
पर्यवसितायां तेन प्रस्तुतार्थव्यक्तिरलंकारः इह तु वाच्यस्य प्रस्तुतत्वेन तत्राभिधायां पर्यवसितार्थसौं
दर्यबलेनाभिमतार्थव्यक्तिर्ध्वनिरेवेति ॥ वस्तुतस्तु अलंकारो न ध्वनिरिति व्यवस्थितं चित्रमीमांसाया
म् ॥ तृतीयोदाहरणस्य तु अलंकारत्वेन सापि न विवादः उक्तं हि ध्वनिकृता ॥ शब्दार्थशक्त्याक्षिप्तोपि
व्यंग्योर्थः कविना पुनः यत्राविःक्रियते स्वोक्त्या सान्यैवालंकृतिर्ध्वनेः ॥ ८१ ॥ इत्येतानि सादृश्यनिबंध

हन्त ५३ अत्र वेश्यावशीकरणस्यात्यंतासंभावितत्वसिद्धये गगनकुसुममालिकाया धारणा
रूपार्थान्तरकल्पनं मिथ्याध्यवसितिः यथा वा अस्पृष्टोपि पनैः परार्द्धपर्याल्लघ्वीकृताः संख्य
या प्रज्ञाचक्षुरवेक्ष्यमाणबाधिरश्राव्याः कित्ना कीर्त्तयः गीयन्ते स्वरमष्टमं कलयता जातेन वं
ध्योदरान्मूकानां प्रकरेण कूर्मरमणीदुग्धोदधे रोधसि ५४ अत्राद्योदाहरणं निदर्शनगर्भं
द्वितीयं तु शुद्धं अत्र संबंधेसंबंधरूपातिशयोक्तितो मिथ्याध्यवसितेः किंचिन्मिथ्यात्वसिद्ध्यर्थं।
मिथ्यार्थान्तरकल्पनाविच्छित्तिविशेषेण भेदः प्रस्तुतेवर्ण्यवाक्यार्थप्रतिबिंबस्य कल्पनं ललि
तं निर्गते नीरे सेतुमेषा चिकीर्षति प्रस्तुते धर्मिणि यो यो वर्णनीयो वाक्यार्थस्तमवर्णयित्वा तत्रै
व सदृशस्य कस्यचिदप्रस्तुतवाक्यार्थस्य वर्णनं ललितम् यथा कथंचिद्दूत्यादिप्रसमागततत्का
लोपेक्षितप्रतिनिवृत्तनायिकां तरासक्तेन नायिकानयनार्थं सखीं प्रेषयितुकामां नायिकाम्।

कु०
५६

मुद्दिश्यपसंख्यावचनेनतद्व्यापारप्रतिविंवभूततगततल्लसंतवंधवर्णनम् नेयमप्रस्तुतप्रशंसाप्रस्तुतध
र्मिकत्वात् नापिसमासोक्तिः प्रस्तुतवृत्तांतेवर्ण्यमानेविशेषणसाधारण्येनसारूप्येणवाप्रस्तुतवृ
त्तांतस्फूर्त्यभावात् अप्रस्तुतवृत्तांतादेवसरूपादिहप्रस्तुतवृत्तांतस्यगम्यमानत्वात् नापिनिद
र्शना प्रस्तुताप्रस्तुतवृत्तांतयोःशब्दोपात्तयोरैक्यसमारोपएवतत्स्याःसत्त्वेष्यात् यदिविषयविष
यिणोःशब्दोपात्तयोःप्रवर्त्तमानएवालंकारोविषयिमात्रोपादानेपिस्यात्तदारूपकमेवभेदेप्य
भेदरूपायाअतिशयोक्तेरपिविषयसमाक्रामेत् ननुतर्ह्यत्रप्रस्तुतनायिकादिनिगरणेनतत्र
शब्दोपात्ताप्रस्तुतनीराघभेदाध्यवसायइति भेदेऽभेदरूपातिशयोक्तिरस्तु एवंतर्हिसारूप्य
निवंधनाप्रस्तुतप्रशंसाविषयेपिसैवातिशयोक्तिःस्यादप्रस्तुतधर्मिकत्वान्नभवतीतिचेन्न
तत्राप्रस्तुतधर्मिवाचकपदस्यप्रसिद्धातिशयोक्त्युदाहरणेष्विवप्रस्तुतधर्मिलक्षकत्वसंभ
वात् नन्वप्रस्तुतप्रशंसायांसरूपादप्रस्तुतवाक्यार्थात् प्रस्तुतवाक्यार्थोवगम्यते नन्वतिश

रामः
५६

योक्ताविवविशेषिवाचकैस्तत्तदेवविषयालंकृत इति भेद इति चेन्न तर्हीहापि प्रस्तुतगमनादप्रस्तुत
वृत्तांतस्वरूपाद्वाक्यार्थान्तरात्प्रस्तुतवृत्तांतस्वरूपो वाक्यार्थो व गम्यते इत्यतिशयोक्तितो भेदोस्तु वस्तु
नस्तु सोऽपूर्वो रसनाविपर्ययविधिस्तत्कर्णयोश्चापलं दृष्टिः सा मदविस्मृतस्वपरदृक् किं भूयसो
क्तेन वा पूर्वं निश्चितवानसि भ्रमर हे यद्वारणोद्याप्यसावन्तःशून्यकरो निषेव्यत इति भ्रातः क ए
ष ग्रहः ५९ इत्याद्यप्रस्तुतप्रशंसोदाहरणे प्रथमप्रतीतादप्रस्तुतवाक्यार्थात्प्रस्तुतवाक्यार्थो व ग
म्यते इत्येतन्न घटते अप्रस्तुते वारणस्य भ्रमरासेव्यत्वे कर्णचापलमात्रस्य भ्रमरनिराकरणस्य हे
तुत्वसंभवेपि रसनाविपर्ययान्तःशून्यकरत्वयोर्हेतुत्वासंभवेन मदस्याप्रस्तुतत्वसेव्यत्वस्य च हेतु
त्वेन रसनाविपर्ययादीनां तद्धेतुत्वाच्चयार्थ्यं वारणपदस्य दुःप्रभुरूपविषयक्रोडीकारेणैव प्रव
र्तेर्विकल्पत्वात् एवं सत्यपि यद्यप्रस्तुतसंबोधनादिविच्छित्तिविशेषात्तत्राप्रशंसायां अतिशयो
क्तितो भेदो घटते तदात्रापि प्रस्तुतं स्वपदेन निर्दिश्य तत्राप्रस्तुतवर्णनारूपस्य विच्छित्तिविशेषस्य

कु० ५८ सद्भावात्ततो भेदः। सुतसंघट्टने पश्यनीलोत्पलद्वन्द्वात् वापीकापि स्फुरन्ति गगने तत्परं सूक्ष्मपद्या इत्या
दिषु प्रस्तुतस्य कस्यचिच्चिह्नैर्भिन्नः स्ववाचकेनानिर्दिष्टत्वादतिशयोक्तिरेव एतेन गतार्थनीरसेतुबंधव
र्णनादिष्वसंबंधवर्णनरूपातिशयोक्तिरस्तीति शंकापि निरस्ता तथा सति कस्त्वंभो कथया
मीत्यादावपि तत्प्रसंगात् सारूप्यनिबंधनप्रस्तुतवाक्यार्थावगतिरूपविच्छित्तिविशेषेणालं
कारांतरकल्पने त्विहापि तुल्यं तस्मात्सर्वालंकारविलक्षणमिदं ललितम् यथा वा ॰ क्व
सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम् ५७ अत्रा
पि निदर्शनाभ्रांतिर्न कर्तव्या ईदृश्यामत्या सूर्यवंशं वर्णयितुमिच्छुरहमिति प्रकृतार्थानुपन्या
सात् तत्प्रतिबिंबप्रस्तुतार्थवर्णना आद्ये विषमालंकारविन्यासेन च केवलं तात्पर्यस्य गम्य
मानत्वात् यथा वा अनायि देशः कतमस्त्वयाद्य वसंतमुक्तस्य दशां वनस्य त्वदाप्तसंकेत
तया कृतार्था श्रावापि नानेन जनेन संज्ञा ५८ अत्र कतमो देशस्त्वया परित्यक्त इति प्र राम: ५८

कु० ६३

लेऽर्थसाम्यमुपमानदुभयमेकस्मिन्निवशाब्देन प्रविशमितिनमन्यामहे सत्पुष्करेत्यादिविरो।
भासे पिञ्चलभिन्नकाऽभेदाध्यवसायमूलातिशयोक्तिलक्ष्यस्य धर्मसाम्यस्यैव शब्दसंप्रतिपा
द्यत्वं शब्दसाम्यस्य न तदप्रतिपाद्यत्वात् श्लेषभिन्नकाभेदाध्यवसायेन धर्मसाम्यलाभान्
गीकारे त्वहो भगवती संध्याजहाति स्वयमेवरमित्यादिश्लिष्टविशेषणसमासोक्तावप्रस
ङ्गात् शब्दसाम्यस्यैव शब्दप्रतिपाद्यत्वे विनश्योपमावाचकत्वस्यैव शब्दाश्लेषवाचकत्वाभावा
च्च शब्दतोऽर्थतो वा कविसंमतसाम्यप्रतिपादने सर्वविधेष्वप्युपमालंकारस्वीकारात् अन्य
था यथा प्रह्लादनाच्चन्द्रः प्रतापात्तपनो यथा नृपैव सोऽभूदन्वर्थो राजा प्रकृतिरञ्जनात्॥२
इत्यत्राप्युपमा न स्यात् न ह्यत्रान्वर्थनामरूपशब्दसाम्यं विना किंचिदर्थसाम्यं कविविव
क्षितमस्ति तस्माद्यत्रैकस्मिन्नर्थे प्रतिपाद्यमानेऽलंकारद्वयलक्षणयोगादलंकारद्वयप्रा
प्तिस्तत्र तयोरलंकारयोरेकवाचकानुप्रवेशः यथा विद्युत्करपरिरंभादात्तनिष्पद्यद्भू

विशेषणसाम्यमात्रेण × उरस्तु ग्रहरतो विशेषणसमासोक्तौ

राम:
६३

स्तुतप्रशंसा यथा वर्ण्यमानमहोरगवृत्तांतकीर्तनेन समीपस्थितखलधर्मोद्घाटनं क्रियते इत्युभय
स्यापि प्रस्तुतत्वात्प्रस्तुतांकुर इति संदेहः एकवाचकानुप्रवेशसंकरस्तु शब्दार्थालंकारयोरेवे
ति लक्षयित्वा काव्यप्रकाशकार उदाजहार स्पष्टोच्छलत्किरणकेसरसूर्यबिंबविस्तीर्णक
र्णिकमथो दिवसारविंदम् श्लिष्टाष्टदिग्दलकलापमुखावतारबद्धांधकारमधुपावलि
संचुकोच १० अत्रैकपदानुप्रविष्टौ रूपकानुप्रासौ यत्रैकस्मिन् श्लोके पदभेदेन शब्दार्था
लंकारयोः स्थितिस्तत्र तयोः संसृष्टिरिति न संकर इति अलंकारसर्वस्वकारस्तु एकस्मिन्वा
चकेनुप्रवेशो वाच्ययोरेवालंकारयोः स्वारसिकः वाच्यप्रतियोगिकत्वोक्तवाचकस्येति मत्वा
र्थालंकारयोरप्येकवाचकानुप्रवेशे संकरमुदाजहार सच्चक्करद्योतितरंगशोभिन्यमंद
मारब्धमृदंगवाद्ये उद्यानवापीपयसीव यस्यामेणीदृशो नाट्यगृहे रमंते ११ अत्र नाट्य
गृहवापीपयसोः सच्चक्करेत्यादिविशेषणतो शब्दसाम्यश्लेषः अमंदमारब्धेत्यादिविशेष

8

त्यबुद्धिप्रियान्वितंस्त्रीवशगंकृशांगंदस्युधातुरंप्रेष्य खतरंकृतघ्नं १९६ त्रिंशांशकेसूर्यसु
र्यसुतस्यभुक्तिस्थितेन्नप्रसूतेसहिजंमनुष्यंपित्ताङ्कितंरूक्षज्वरमल्पवीर्यंनीचैरतंधर्मवि
वर्जितंच १९७ त्रिंशांशकेदेवपुरोहितस्यभुक्तौभ्रमन्देवरतंप्रसूतेस्वधर्मशीलंसुजनंप्र
तोषनरेंद्रपूज्यंपतनाधिपंच १९८ त्रिंशांशकेसोमसुतस्यभुक्तिस्थितेन्नप्रसूतेसुवपु
मनुष्यंधान्यंधनाढ्यंपरदाररक्तं हस्त्यश्वभाजंन्नपवल्लभंच १९९ त्रिंशांशकेस्वभृगुजःप्रसूते
क नरंविनीतंधनधान्यवंतंकीर्त्तिकरंकामेल्लाविज्ञंहास्यारतंकेलिकलाप्रियंच १०० इतिभृगुष
द्रुगः अथपरानेः॥ होरागतोवासरपस्ययोऽत्रिनरंप्रसूतेबहुवैरियुक्तं विनष्टधर्मविगताभि
मानंदयाविहीनंपरदारलुब्धं १०१ होरागतोरात्रिपतेस्तुसोऽत्रिनरंप्रसूतेबहुकीर्त्तियु
क्तं सौंदर्यसौख्यार्थसमृद्धियुक्तं प्रियंमनोज्ञंप्रणतंस्मराणां १०२ इतिहोरा अथद्रेष्का
नं द्रेष्काणसंस्थोदिनपस्ययोऽत्रिकरोतिकन्याप्रजनंमनुष्यं व्यापामभाजंविगतप्रतापं

१५

विनष्टशीलं कुटिलं कृतघ्नं २०३ भागे तृतीये रविजः प्रसूते चंद्रस्य मर्त्यं धनधान्ययुक्तं विवे
किनं सर्वफलं सुदक्षं विपद्विहीनं सुतलाभदं च २०४ भागे तृतीये वनिजस्य सौरिः चौरं परं
कृष्टकरं प्रसूते सुनिष्ठुरं पापरतं नृशंसं व्यपेतलज्जा गतसौहृदं च २०५ द्रेष्काणसंस्थो
राशिजस्य शौरिः करोति मर्त्यं बहुशास्त्रयुक्तं विज्ञानिनं धर्मरतं प्रसन्नं स्वदारलुब्धं कृतसाध
नं च २०६ द्रेष्काणसंस्थो सुरपूजितस्य सौरि प्रसूते द्विजदेवभक्तं प्रियं जनं सर्वजनैः प्रग
ल्भं पूजितसाधुसंगं २०७ भागे तृतीये रविजा प्रसूते भृगोस्य तिष्ठन् प्रचुरान्नपानां लाभान्वि रा
तं धर्मपरं सुमित्रं हतारिपक्षं व्यसनैर्वियुक्तं २०८ स्ववह्निभागे रविजा प्रसूते नरं सदाचा
ररतं सुबुद्धिं नृपात्मगेः प्रीतिकरं स्वदान्यं विमुक्तरोगं बहुमित्रयुक्तं २०९ प्रथनवांशः
सूर्यस्य भागे नवमेर्कसूनुर्नरं प्रसूते बहुती वक्रकोपं हि संप्रमत्तं स्वजनैर्विमुक्तं प्रदुष्टशीलं

ष्टवियोजनं॥ शत्रुतो न भयं तस्य दस्युतो वा न राजतः॥ न शस्त्रान
लतोयौघात्कदाचित्संभविष्यति॥५॥ तस्मान्ममैतन्माहात्म्यं प
ठितव्यं समाहितैः॥ श्रोतव्यं च सदा भक्त्या परं स्वस्त्ययनं महत्॥६ कितत
उपसर्गानशेषांस्तु महामारीसमुद्भवान्॥ तथा त्रिविधमुत्पा
तं माहात्म्यं शमयेन्मम॥७॥ यत्रैतत्पठ्यते सम्यक् नित्यमाय ३.
तने मम॥ सदा न तद्विमोक्ष्यामि सान्निध्यं तत्र मे स्थितं॥८॥ ब
लिप्रदाने पूजायामग्निकार्ये महोत्सवे॥ सर्वं ममैतच्चरितमुच्चा

येश्राव्यमेवच ॥११॥ ज्ञानताज्ञानतोवापिबलिपूजांतथाकृतां ॥ प्रती
द्वि च्छिष्याम्यहंप्रीत्यावह्निहोमंतथाकृतं ॥१२॥ शरत्कालेमहापूजा
क्रियतेयाचवार्षिकी ॥ तस्यांममैतन्माहात्म्यंश्रुत्वाभक्तिसम
न्वितः ॥ सर्वाबाधाविनिर्मुक्तोधनधान्यसुतान्वितः मनुष्योमत्
प्रसादेनभविष्यतिनसंशयः ॥१३॥ श्रुत्वाममैतन्माहात्म्यंतथा
चोत्पत्तयःशुभाः ॥ पराक्रमंचयुद्धेषुजायतेनिर्भयःपुमान् ॥१४॥
रिपवःसंक्षयंयांति ॥ कल्याणंचोपपद्यते ॥ नंदतेचकुलंपुंसां ६३

धर्मोपैस्तथोन्नमैः ॥१९॥ विप्राणां भोजनैर्होमैः प्रोक्षणीयै रहर्निशं
अन्यैश्च विविधैर्भोगैः प्रदानैर्वस्त्ररेणया ॥२०॥ प्रीतिर्मे क्रियते सा
स्मिन् सहस्तत्त्वचरिते क्रते ॥ क्रतं करोति पापानि नश्यारोग्यं प्रय
च्छति ॥२१॥ रक्तां करोति सूनेभोजनकर्मनां कीर्तनं मम ॥ युद्धेषु चरि
तं यत्ने दुष्टदैत्यनिवर्हणं ॥२२॥ तस्मिन् क्रते वैरिकृतं भयं पुंसां न
जायते ॥ युष्माभिस्तनयोयाश्च याश्च ब्रह्मर्षिभिः कृताः ॥२३॥ ब्र
ह्मणा च कृताः [illegible] स्तुतयश्च शुभां मतिं ॥ अरण्ये प्रांतरे वापि दा ६५

स्तात्

माहात्म्यं मम शृण्वतां ॥ १४ ॥ शांतिकर्मणि सर्वत्र तथा दुःस्वप्न
दर्शने ॥ ग्रहपीडासु चोग्रासु माहात्म्यं शृणुयान्मम ॥ १५ ॥ उपस
र्गाः शमं यांति ग्रहपीडाश्च दारुणाः ॥ दुःस्वप्नं च नृभिर्दृष्टं सुस्वप्नमुप
जायते ॥ १६ ॥ बालग्रहाभिभूतानां बालानां शांतिकारकम् ॥ सं
घातभेदे च नृणां मैत्रीकरणमुत्तमम् ॥ १७ ॥ दुर्वृत्तानामशेषाणां
बलहानिकरं परं ॥ रक्षोभूतपिशाचानां पठनादेव नाशनं ॥ १८ ॥
सर्वं ममैतन्माहात्म्यं मम सान्निध्यकारकं ॥ पशुपुष्पार्घधूपैश्च गं